अद्यापि तत्कमलरेणुसुगन्धिगन्धं
तत्प्रेमवारि मकरध्वजतापहारि ।
प्राप्नोम्यहं यदि पुनः सुरतैकतीर्थं
प्राणान् त्यजामि नियतं पुनराप्तिहेतोः ॥ ४१ ॥

अद्यापि सा यदि पुनर्नलिनीवनान्ते
रोमाञ्चवीचिविलसच्चपलाङ्गयष्टिः ।
कादम्बकेशररुचः कणमात्रसङ्गात्
किञ्चित् क्लमं क्षपयति प्रियराजहंसी ॥ ४२ ॥

तत्सम्भ्रमैः तत्सदृक्षैः अतएव सुन्दर्य्यः मनोहारिण्यः रुचः कान्तयः येषां तादृशाः नयनार्द्धपाताः कटाक्षविक्षेपाः अद्यापि मे मम चेतः चित्तं हरन्ति ॥ ४० ॥

अद्यापीति । अद्यापि कमलरेणुः पद्मपरागः तद्वत् सुगन्धिः शोभन इत्यर्थः गन्धो यस्य तादृशं मकरध्वजतापहारि मदनसन्ताप-हरं सुरतमेव एकम् अद्वितीयं तीर्थम् अवतरणस्थानं यस्य तथा-भूतं तत् तस्याः कान्तायाः प्रेमवारि प्रणयसलिलं यदि पुनरहं प्राप्नोमि तदा नियतं पुनराप्तिहेतोः पुनर्लाभाय जन्मान्तरे इति भावः प्राणान् त्यजामि ॥ ४१ ॥

अद्यापीति । सा प्रियराजहंसी यदि पुनः नलिनीवनान्ते पद्मिनीवनसीमायां रोमाञ्च एव वीचयस्तरङ्गाः तैः विलसन्ती विस्फु-रन्ती चपला अङ्गयष्टिः यस्याः तथोक्ता सती कादम्बाः कदम्बसम्बन्धिनः ये केशराः किञ्जल्काः तेषां रुचः कान्तेः कणमात्रसङ्गात् किञ्चिन्मात्र-सम्पर्कात् किञ्चित् ईषत् क्लमं क्लान्तिं सन्तापमित्यर्थः ममेति शेषः क्षपयति नाशयति तदाहं कृतार्थो भवेयमिति भावः ॥ ४२ ॥

अद्यापि तां नृपतिशेखरराजकन्यां
सम्पूर्णयौवनमदालसभङ्गगात्रीम् ।
गन्धर्वयक्षसुरकिन्नरराजकन्यां
स्वर्गादिमां निपतितामिव चिन्तयामि ॥ ४२ ॥

अद्यापि तत्सुरतकेलिनिबद्धबुद्धि-
रङ्गोपबन्धपतितो नृप ! सन्नहस्तः ।
दन्तौष्ठपीडननखक्षतरक्तसिक्त-
स्तस्याः स्मरामि रतिबन्धुरगात्रयष्टिम् ॥ ४४ ॥

अद्यापि तां निजवपुःकृतवेदिमध्यां
मत्सङ्गसम्मितसुधां स्तनभारनम्राम् ।

अद्यापीति । अद्यापि सम्पूर्णयौवनमदेन अलसभङ्गः यस्य तादृशं गात्रं यस्याः तथोक्तां तामिमां नृपतिशेखरराजस्य राजाधिराजशिरोमणेरित्यर्थः कन्यां स्वर्गात् निपतितां गन्धर्वयक्षसुरकिन्नरराजकन्यामिव गन्धर्वकन्यामिव यक्षकन्यामिव देवकन्यामिव किन्नरराजकन्यामिव चिन्तयामि स्मरामि ॥ ४२ ॥

अद्यापीति । हे नृप ! तस्याः सुरतकेलौ निबद्धा स्थिता बुद्धिर्यस्य तथोक्तः, अङ्गानाम् उपबन्धेन सम्यक् बन्धनेन पतितः भूमौ निपतितः अहं तया सन्नौ अवसादं गतौ स्पन्दरहितौ इति भावः हस्तौ यस्य तादृशः, दन्तेन यत् ओष्ठपीडनं नखक्षतञ्च तस्मात् यत् रक्तं तेन सिक्तोऽहं रत्या अनुरागेण सुरतेन वा बन्धुरा विषमा गात्रयष्टिः अङ्गयष्टिः यस्याः ताम् अद्यापि स्मरामि ॥ ४४ ॥

अद्यापीति । निजवपुः स्वशरीरमेव कृतं वेदिमध्यं परिष्कृत-म् निम्नमध्यं मदधिष्ठानार्थमिति भावः यया तथोक्तां, वेदिः परिष्कृता

नानाविचित्रकृतमण्डनमण्डिताङ्गीं
सुप्तोत्थितां निशि दिवा न हि विस्मरामि ॥ ४५ ॥

अद्यापि तां कनककान्तिमदालसाङ्गीं
क्रीड़ोत्सुकाभिजनभीषणवेपमानाम् ।
अङ्गाङ्गसङ्गपरिजृम्भितमोहभङ्गि-
सञ्जीवनौषधमिव प्रमदां स्मरामि ॥ ४६ ॥

अद्यापि तां नववधूसुरताभियोगे
सम्पूर्णकेलिविधिना रचितां कदाचित् ।
पूर्णेन्दुसुन्दरमुखीं हरिणायताक्षीं
उन्निद्रकोकनदपत्रनखीं स्मरामि ॥ ४७ ॥

भूमिरित्यमरः । मम अङ्गेन सङ्गत्या मर्दिता क्षमीकृता सुधा अलङ्कृतं यया तां स्तनभारेण नम्रां अवनतां नाना विविधं विचित्रं चारु कृतं यत् मण्डनं भूषणं तेन मण्डितम् अलङ्कृतम् अङ्गं यस्याः तादृशीं सुप्तोत्थितां शयनादुत्थितां तां निशि रात्रौ दिवा च न हि नैव विस्मरामि ॥ ४५ ॥

अद्यापीति । कनककान्तिः काञ्चनप्रभा युतं युतं मदेन मद्यपानेन अलसमङ्गं यस्या तां क्रीड़ोत्सुका विहारार्थिनी किन्तु अभिजनानाम् अभितः समन्तात् जनानां भीषणैः भयप्रदर्शनैः वेपमाना कम्पमाना च ताम् अङ्गाङ्गसङ्गेन प्रत्यङ्गसंसर्गेण तस्या इति भावः परिजृम्भिता आविर्भूता इति यावत् मोहभङ्गिः मोहविन्यासः यस्य तथोक्तः अहं तां प्रमदां कान्तां मम जीवनौषधमिव स्मरामि ॥ ४६ ॥

अद्यापीति । नववधूनां यत् सुरतं तन्निमित्तम् अभियोगः रागः समीपे आवेदनव्यापारः तस्मिन् सम्पूर्णः केलिः विहारः आनन्दः यस्य तादृशः यो विधिः क्रमः तेन कदाचित् रचि तां

अद्यापि तद्विकसिताम्बुजगौरमध्यं
गोरोचनातिलकविन्दुकृतैकदेशम् ।
ईषन्मदालसविघूर्णितदृष्टिपातं
कान्तामुखं नृप ! मया सह गच्छतीव ॥ ४८ ॥

अद्याप्यहं नववधूसुरताभियोगं
शक्नोमि नान्यविधिना रचितुं कदाचित् ।
तद्भ्रातरो ! मरणमेव हि दुःखशान्त्यै
विज्ञापयामि भवति त्वरितं सुनीतिः ॥ ४९ ॥

धर्षितां पूर्णेन्दुसुन्दरमुखीं हरिणायताक्षीं मृगायतलोचनाम्
उन्निद्राणि विकसितानि यानि कोकनदपत्राणि रक्तोत्पलदलानि तद्वत्
मध्याः यस्याः तथाविधां ताम् अद्यापि स्मरामि ॥ ४७ ॥

अद्यापीति । हे सखि ! अद्यापि विकसितं यत् अम्बुजं पद्मं
तद्वत् गौरं मध्यम् आयतनमित्यर्थः यस्य तादृशं गोरचनायाः यत्
तिलकं तस्य विन्दुना कृतः अलङ्कृत इत्यर्थः एकदेशः यस्य तथोक्तम्
ईषत् मदेन अलसः विघूर्णितश्च दृष्टिपातो यस्य तथाभूतं तत् कान्ता-
मुखं मया सह गच्छतीव यत्राहं गच्छामि तत्रैव चलतीव
॥ ४८ ॥

अद्यापीति । अद्यापि अहं कदाचित् नववध्वाः सख्या इति
भावः सुरताभियोगं सुरतव्यापारम् अन्यविधिना अन्येन विधानेन
उपायेनेति यावत् रचितुं कर्तुं न शक्नोमि, हे भ्रातरः ! तत्
तस्मात् दुःखशान्त्यै सन्तापनिवृत्त्यै त्वरितं सत्वरं मरणमेव नान्यद्विलम्ब-
कारार्थः । सुनीतिः सुष्ठु नीतिः भवति इति विज्ञापयामि युष्मानिति
शेषः तत् सत्वरं यथा मृत्युः स्यात् तथा विधीयतामिति भावः । इदं
काम् प्रत्युक्तिरियम् ॥ ४९ ॥

अद्यापि नोज्झति हरः किल कालकूटं
कूर्मो बिभर्त्ति धरणीं खलु पृष्ठकेन ।
अम्भोनिधिर्वहति दुःसहबाड़वाग्निं
अङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ ५० ॥

चौरकविकृता चौरपञ्चाशिका समाप्ता ।

---

काव्यसंग्रहस्य प्रथमोभागः सम्पूर्णः ।

अद्यापीति । हरः शम्भुः अद्यापि कालकूटं हलाहलं न किल उज्झति नैव त्यजति नैवोद्गिरतीत्यर्थः । कूर्मः पृष्ठकेन धरणीं पृथ्वीं बिभर्त्ति खलु धारयत्येव, अम्भोनिधिः दुःसहबाड़वाग्निं दुःसहं बाड़वानलं वहति धारयति । तथाहि सुकृतिनः पुण्यवन्तः महान्त इति यावत् अङ्गीकृतं परिपालयन्ति रक्षन्ति न तु त्यजन्तीति भावः । तथाचाहं राजसुतां मरणेऽपि न त्यजामीति भावः ॥ ५० ॥

---

इति बि, ए, उपाधिधारिणा
श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता काव्यसंग्रह-
प्रथमभागव्याख्या समाप्ता ।

[illegible] बृहदारण्यक सटीक सभाष्य १०
[illegible] सुश्रुत (वैद्यक) ४
६१ शार्ङ्गधर (वैद्यक) १
६२ वेतालपञ्चविंशतिः ।।।
६३ पातञ्जलदर्शन(सभाष्यसटीक) २
६४ आत्मतत्त्वविवेक(बौद्धाधिकार) २
६५ मुक्तिकोपनिषत् ।
६६ उपमानचिन्तामणि ।
६७ नागानन्द नाटक ।०
६८ पूर्णप्रज्ञ दर्शनम् सभाष्य ।।।
६९ चन्द्रशेखरचम्पूकाव्य २
७० साहित्यदर्पणम् (मूलमात्र) ।।।
७१ सामवेदस्य आरण्यसंहिता सायणाचार्य्यकृत भाष्यसहिता १
७२ विद्धशालभञ्जिकानाटिका सटीक १
७३ कारण्डव्यूह (बौद्धशास्त्र) २
७४ कुवलयानन्द अलङ्कार सटीक २
७५ प्रियदर्शिका नाटिका सटीक ॥
७६ सारस्वत व्याकरण सटीक पूर्वार्द्धम् १
७७ वासवदत्ता सटीक १
७८ पुष्पबाणविलास काव्य सटीक ॥
७९ मङ्घिपशतकम्, पदारविन्दशतकम्, स्तुतिशतकम्, मन्दस्मितशतकम्, कटाक्षिशतकम् १
८० मनुसंहिता टीका सहित २
८१ नैषधचरितम् टीका सहित ५
८२ चन्द्रालोक प्राचीन अलङ्कार ।०
८३ वीरमित्रोदय (स्मृतिशास्त्र) ५
८४ भावप्रकाश (वैद्यक) ५
८५ प्रबोधचन्द्रोदय नाटक सटीक १
८६ अनर्घराघवनाटक(मुरारिकृत) २
८७ दैवतब्राह्मण सभाष्य १
८८ षड्विंशब्राह्मणम् सभाष्य १
८९ मीमांसापरिभाषा ।०
९० अर्थसंग्रह(लौगाक्षिमीमांसा) ।
९१ रघुवंश सटीक १
९२ मेघदूत सटीक ।।
९३ कथासरित्सागर (सम्पूर्ण) ६
९४ ईश्वरानुमानचिन्तामणि ॥
९५ न्यायदर्शन सभाष्य सवृत्ति २॥
९६ सटीक वाल्मीकिरामायण बालकाण्डम् १
९७ साहित्यदर्पण सटीक १॥
९८ मदनपालनिघण्टुः (वैद्यक) ॥
९९ संस्कृतशिक्षामञ्जरीप्रथमभागः ।
१०० संस्कृतशिक्षामञ्जरीद्वितीयभागः ।०
१०१ संस्कृतशिक्षामञ्जरीतृतीयभागः ॥
१०२ श्रीहर्षचरित बाणभट्टकृत १
१०३ अमरकोष ॥
१०४ वेदान्तसूत्र सभाष्य सटीक १०
१०५ वेदान्तपरिभाषा १
१०६ वेदान्तसारसटीक ॥
१०७ सटीक निदान (वैद्यक) १॥
१०८ कामन्दकी नीतिसार ।।।
१०९ मल्लिकामारुतप्रकरणसटीक २
११० अत्रि, विष्णु, हारीत, याज्ञवल्क्य, उशना, आङ्गिरा, यम, आपस्तम्ब, संवर्त्त, कात्यायन, बृहस्पति, पराशर, व्यास, शङ्ख, लिखित, दक्ष गौतम, शातातप, वशिष्ठ प्रणीत संहिता (धर्मशास्त्र) १०